६. अल्पश्रुतं श्रुतवतां परिहासधाम,
त्वद्भक्तिरेव मुखरीकुरुते बलान्माम् ।
यत्कोकिल: किलमधौ मधुरं विरौति,
तच्चाम्र-चारु-कलिकानिकरैकहेतु: ॥

७. त्वत्संस्तवेन भवसंतति-सन्निवद्धं,
पापं क्षणात्क्षयमुपैति शरीरभाजाम् ।
आक्रान्त-लोकमलिनीलमशेषमाशु,
सूर्यांशुभिन्नमिव शार्वरमन्धकारम् ॥

८. मत्वेति नाथ ! तव संस्तवनं मयेद-
मारभ्यते तनुधियापि तव प्रभावात् ।
चेतो हरिष्यति सतां नलिनीदलेषु,
मुक्ताफल-द्युतिमुपैति ननूदबिन्दु: ॥

९. आस्तां तव स्तवनमस्तसमस्त-दोषं,
त्वत्संकथापि जगतां दुरितानि हन्ति ।
दूरे सहस्रकिरण: कुरुते प्रभैव,
पद्माकरेषु जलजानि विकाशभाञ्जि ॥

१०. नात्यद्भुतं भुवनभूषण ! भूतनाथ !
भूतैर्गुणैर्भुवि भवन्तमभिष्टुवन्त: ।
तुल्या भवन्ति भवतो ननु तेन किं वा,
भूत्याश्रितं य इह नात्मसमं करोति ॥

११. दृष्ट्वा भवन्तमनिमेषविलोकनीयं,
नान्यत्र तोषमुपयाति जनस्य चक्षु: ।
पीत्वा पय: शशिकरद्युतिदुग्धसिन्धो:,
क्षारं जलं जलनिधेरसितुं क इच्छेत् ॥

१२. यैः शान्तरागरुचिभिः परमाणुभिस्त्वं,
निर्मापितस्त्रिभुवनैक-ललामभूत !
तावन्त एव खलु तेऽप्यणवः पृथिव्यां,
यत्ते समानमपरं नहि रूपमस्ति ॥

१३. वक्त्रं क्व ते सुरनरोरगनेत्रहारि,
निःशेषनिर्जितजगत्-त्रितयोपमानम् ।
विम्बं कलङ्कमलिनं क्व निशाकरस्य,
यद्वासरे भवति पाण्डुपलाशकल्पम् ॥

१४. सम्पूर्णमण्डल-शशाङ्ककलाकलाप-
शुभ्रा गुणास्त्रिभुवनं तव लङ्घयन्ति ।
ये संश्रितास्त्रिजगदीश्वर ! नाथमेकं,
कस्तान् निवारयति संचरतो यथेष्टम् ॥

१५. चित्रं किमत्र यदि ते त्रिदशांगनाभि-
र्नीतं मनागपि मनो न विकार-मार्गम् ।
कल्पान्तकालमरुता चलिताचलेन,
किं मन्दराद्रिशिखरं चलितं कदाचित् ॥

१६. निर्धूमवर्तिरपवर्जित-तैलपूरः,
कृत्स्नं जगत्त्रयमिदं प्रकटीकरोषि ।
गम्यो न जातु मरुतां चलिताचलानां,
दीपोऽपरस्त्वमसि नाथ ! जगत्प्रकाशः ॥

१७. नास्तं कदाचिदुपयासि न राहुगम्यः,
स्पष्टीकरोषि सहसा युगपज्जगन्ति ।
नाम्भोधरोदरनिरुद्धमहाप्रभावः,
सूर्यातिशायिमहिमासि मुनीन्द्र ! लोके ॥

१८. नित्योदयं दलितमोहमहान्धकारं,
गम्यं न राहुवदनस्य न वारिदानाम् ।
विभ्राजते तव मुखाब्जमनल्पकान्ति,
विद्योतयज्जगदपूर्वशशाङ्कविम्वम् ॥

१९. किं शर्वरीषु शशिनाऽह्नि विवस्वता वा ?
युष्मन्मुखेन्दुदलितेषु तमस्सु नाथ ।
निष्पन्नशालिवनशालिनि जीवलोके
कार्यं कियज्जलधरैर्जलभारनम्रैः ॥

२०. ज्ञानं यथा त्वयि विभाति कृतावकाशं,
नैवं तथा हरिहरादिषु नायकेषु ।
तेजः स्फुरन्मणिषु याति यथा महत्वं
नैवं तु काचशकले किरणाकुलेऽपि ॥

२१. मन्ये वरं हरिहरादय एव दृष्टा,
दृष्टेषु येषु हृदयं त्वयि तोषमेति ।
किं वीक्षितेन भवता भुवि येन नान्यः,
कश्चिन्मनो हरति नाथ ! भवान्तरेऽपि ! ॥

२२. स्त्रीणां शतानि शतशो जनयन्ति पुत्रान्,
नान्या सुतं त्वदुपमं जननी प्रसूता ।
सर्वा दिशो दधति भानि सहस्ररश्मिं,
प्राच्येव दिग् जनयति स्फुरदंशुजालम् ॥

२३. त्वामामनन्ति मुनयः परमं पुमांस–
मादित्यवर्णममलं तमसः परस्तात् ।
त्वामेव सम्यगुपलभ्य जयन्ति मृत्युं,
नान्यः शिवः शिवपदस्य मुनीन्द्र ! पन्थाः ॥

२४. त्वामव्ययं विभुमचिन्त्यमसंख्यमाद्यं,
ब्रह्माणमीश्वरमनन्तमनङ्गकेतुम् ।
योगीश्वरं विदितयोगमनेकमेकं,
ज्ञानस्वरूपममलं प्रवदन्ति सन्तः ॥

२५. बुद्धस्त्वमेव विबुधार्चित् ! बुद्धि-बोधात्,
त्वं शङ्करोऽसि भुवनत्रय शङ्करत्वात् ।
धाताऽसि धीर ! शिवमार्गविधेर्विधानात्,
व्यक्तं त्वमेव भगवन् ! पुरुषोत्तमोऽसि ॥

२६. तुभ्यं नमस्त्रिभुवनार्तिहराय नाथ !
तुभ्यं नमः क्षितितलामलभूषणाय ।
तुभ्यं नमस्त्रिजगतः परमेश्वराय
तुभ्यं नमो जिन ! भवोदधि-शोषणाय ॥

२७. को विस्मयोऽत्र यदि नाम गुणैरशेषै-
स्त्वं संश्रितो निरवकाशतया मुनीश !
दोषैरुपात्त-विविधाश्रय-जातगर्वैः,
स्वप्नान्तरेऽपि न कदाचिदपीक्षितोऽसि ॥

२८. उच्चैरशोकतरुसंश्रितमुन्मयूख,
माभाति रूपममलं भवतो नितान्तम् ।
स्पष्टोल्लसत्किरणमस्ततमो वितानं,
बिम्बं रवेरिव पयोधर-पार्श्ववर्ति ॥

२९. सिंहासने मणिमयूखशिखाविचित्रे,
विभ्राजते तव वपुः कनकावदातम् ।
बिम्बं वियद्विलसदंशुलता-वितानं,
तुङ्गोदयाद्रिशिरसीव सहस्ररश्मेः ॥

३०. कुन्दावदात-चलचामर-चारु शोभं,
विभ्राजते तव वपुः कलधौतकान्तम् ।
उद्यच्छशाङ्क-शुचिनिर्झर-वारिधार-
मुच्चैस्तटं सुरगिरेरिव शातकौम्भम् ।।

३१. छत्रत्रयं तव विभाति शशाङ्ककान्त
मुच्चैः स्थितं स्थगित भानुकर-प्रतापम् ।
मुक्ताफल-प्रकरजाल-विवृद्धशोभं,
प्रख्यापयत् त्रिजगतः परमेश्वरत्वम् ।।

३२. गम्भीरताररवपूरित-दिग्विभाग-
स्त्रैलोक्यलोक-शुभसङ्गम-भूतिदक्षः ।
सद्धर्मराजजयघोषणा-घोषकः सन्
खे दुन्दुभिर्ध्वनति ते यशसः प्रवादी ।।

३३. मन्दार-सुन्दर-नमेरु-सुपारिजात-
सन्तानकादिकुसुमोत्करवृष्टिरुद्धा ।
गन्धोदविन्दु-शुभमन्द-मरुत्प्रपाता,
दिव्या दिवः पतति ते वचसां ततिर्वा ।।

३४. शुम्भत्प्रभावलय-भूरिविभा विभोस्ते
लोकत्रयद्युतिमतां द्युतिमाक्षिपन्ती ।
प्रोद्यद्-दिवाकर-निरन्तरभूरिसंख्या,
दीप्त्या जयत्यपि निशामपि सोम-सौम्याम् ।।

३५. स्वर्गापवर्गगममार्ग-विमार्गणेष्टः
सद्धर्मतत्त्वकथनैक-पटुस्त्रिलोक्याः ।
दिव्यध्वनिर्भवति ते विशदार्थसर्व-
भाषास्वभाव-परिणामगुणैः प्रयोज्यः ।।

३६. उन्निद्रहेमनवपङ्कज-पुञ्जकान्ती,
पर्युल्लसन्नखमयूखशिखाभिरामौ ।
पादौ पदानि तव यत्र जिनेन्द्र ! धत्तः
पद्मानि तत्र विबुधाः परिकल्पयन्ति ।।

३७. इत्थं यथा तव विभूतिरभूज्जिनेन्द्र !
धर्मोपदेशनविधौ न तथा परस्य ।
यादृक् प्रभा दिनकृतः प्रहतान्धकारा,
तादृक् कुतोग्रह-गणस्य विकाशिनोऽपि ।।

३८. श्च्योतन्मदाविलविलोलकपोलमूल-
मत्त-भ्रमद्भ्रमरनादविवृद्धकोपम् ।
ऐरावताभमिभमुद्धतमापतन्तं,
दृष्ट्वा भयं भवति नो भवदाश्रितानाम् ।।

३९. भिन्नेभकुम्भगलदुज्ज्वल-शोणिताक्त-
मुक्ताफल प्रकर-भूषित-भूमिभागः ।
वद्धक्रमः क्रमगतं हरिणाधिपोऽपि,
नाक्रामति क्रमयुगाचलसंश्रितं ते ।।

४०. कल्पान्तकाल-पवनोद्धत-वह्निकल्पं,
दावानलं ज्वलितमुज्ज्वलमुत्स्फुलिङ्गम् ।
विश्वं जिघत्सुमिव सम्मुखमापतन्तं,
त्वन्नामकीर्तनजलं शमयत्यशेषम् ।।

४१. रक्तेक्षणं समदकोकिल-कण्ठनीलं,
क्रोधोद्धतं फणिनमुत्फणमापतन्तम् ।
आक्रामति क्रमयुगेन निरस्तशङ्क-
स्त्वन्नामनागदमनी हृदि यस्य पुंसः ।।

४२. वल्गत्तुरङ्गगजगर्जित-भीमनाद-
माजौ बलं बलवतामपि भूपतीनाम् ।
उद्यद्दिवाकरमयूख-शिखापविद्धं,
त्वत्कीर्तनात् तम इवाशुभिदामुपैति ॥

४३. कुन्ताग्रभिन्नगज-शोणितवारिवाह-
वेगावतार-तरणातुरयोध-भीमे ।
युद्धे जयं विजितदुर्जयजेयपक्षा-
स्त्वत्पाद-पङ्कजवनाश्रयिणो लभन्ते ॥

४४. अम्भोनिधौ क्षुभितभीषणनक्रचक्र
पाठीनपीठभयदोल्वणवाडवाग्नौ ।
रङ्गत्तरङ्गशिखरस्थितयानपात्रा-
स्त्रासं विहाय भवतः स्मरणाद् व्रजन्ति ॥

४५. उद्भूतभीषणजलोदर-भारभुग्नाः
शोच्यां दशामुपगताश्च्युतजीविताशाः ।
त्वत्पाद-पङ्कजरजोऽमृतदिग्धदेहा,
मर्त्या भवन्ति मकरध्वजतुल्यरूपाः ॥

४६. आपाद-कण्ठमुरुशृंखल-वेष्टिताङ्गा,
गाढं बृहन्निगडकोटिनिघृष्टजङ्घाः ।
त्वन्नाममन्त्रमनिशं मनुजाः स्मरन्तः,
सद्यः स्वयं विगतबन्धभया भवन्ति ॥

४७. मत्तद्विपेन्द्र-मृगराजदवानलाहि,
संग्रामवारिधिमहोदरबन्धनोत्थम् ।
तस्याशु नाशमुपयाति भयं भियेव
यस्तावकं स्तवमिमं मतिमानधीते ॥

४८. स्तोत्रस्रजं तवजिनेन्द्र ! गुणैर्निवद्धां,
भक्त्या मया विविधवर्ण विचित्रपुष्पाम् ।
धत्ते जनो य इह कंठगतामजस्रं,
तं मानतंगमवशा समुपैति लक्ष्मीः ॥

( ७ )

**श्री कल्याण-मन्दिर स्तोत्र**

(आचार्य श्री सिद्धसेन)

१. कल्याण-मन्दिरमुदारमवद्य-भेदि,
भीताभयप्रदमनिन्दितमङ्घ्रि-पद्मम् ।
संसार-सागर-निमज्जदशेष-जन्तु-
पोतायमानमभिनम्य जिनेश्वरस्य ॥

२. यस्य स्वयं सुर-गुरुर्गरिमाम्बुराशेः,
स्तोत्रं सुविस्तृतमतिर्न विभुर्विधातुम् ।
तीर्थेश्वरस्य कमठस्मय-धूमकेतोस्-
तस्याहमेष किल संस्तवनं करिष्ये ॥

३. सामान्यतोऽपि तव वर्णयितुं स्वरूप-
मस्मादृशाः कथमधीश ! भवन्त्यधीशाः ।
धृष्टोऽपि कौशिक-शिशुर्यदिवा दिवान्धो,
रूपं प्ररूपयति किं किल घर्मरश्मेः ॥

४. मोहक्षयादनुभवन्नपि नाथ ! मर्त्यो,
नूनं गुणान् गणयितुं न तव क्षमेत ।
कल्पान्तवान्तपयसः प्रकटोऽपि यस्मान्-
मीयेत केन जलधेर्ननु रत्नराशिः ? ॥

५. अभ्युद्यतोऽस्मि तव नाथ ! जडाशयोऽपि,
कर्तुं स्तवं लसदसंख्य-गुणाकरस्य ।
वालोऽपि किं न निज-वाहुयुगं वितत्य,
विस्तीर्णतां कथयति स्वधियाम्बुराशेः ? ॥

६. ये योगिनामपि न यान्ति गुणास्तवेश !
वक्तुं कथं भवति तेषु ममावकाशः ।
जाता तदेवमसमीक्षित-कारितेयं,
जल्पन्ति वा निजगिरा ननु पक्षिणोऽपि ॥

७. आस्तामचिन्त्यमहिमा जिन ! संस्तवस्ते,
नामाऽपि पाति भवतो भवतो जगन्ति ।
तीव्रातपोपहत-पान्थ-जनान् निदाघे,
प्रीणाति पद्मसरसः सरसोऽनिलोऽपि ॥

८. हृद्वर्तिनि त्वयि विभो ! शिथिलीभवन्ति,
जन्तोः क्षणेन निविडा अपि कर्म बन्धाः ।
सद्यो भुजङ्गममया इव मध्यभाग-
मभ्यागते वनशिखंडिनी चन्दनस्य ॥

९. मुच्यन्त एव मनुजाः सहसा जिनेन्द्र !
रौद्रै रुपद्रवशतैस्त्वयि वीक्षितेऽपि ।
गो-स्वामिनि स्फुरित-तेजसि दृष्टमात्रे,
चौरैरिवाशु पशवः प्रपलायमानैः ॥

१०. त्वं तारको जिन ! कथं भविनां त एव,
त्वामुद्वहन्ति हृदयेन यदुत्तरन्तः ।
यद्वा दृतिस्तरति यज्जलमेष नून-
मन्तर्गतस्य मरुतः स किलानुभावः ॥

११. यस्मिन् हर-प्रभृतयोऽपि हतप्रभावाः,
सोऽपि त्वया रतिपतिः क्षपितः क्षणेन ।
विध्यापिता हुतभुजः पयसाथ येन,
पीतं न किं तदपि दुर्धर-वाडवेन ॥

१२. स्वामिन्ननल्प-गरिमाणमपि प्रपन्नास्
त्वां जन्तवः कथमहो हृदये दधानाः ?
जन्मोदधिं लघु तरन्त्यतिलाघवेन,
चिन्त्यो न हन्त महतां यदि वा प्रभावः ॥

१३. क्रोधस्त्वया यदि विभो प्रथमं निरस्तो,
ध्वस्तास्तदा वद कथं किल कर्म-चौराः ।
प्लोषत्यमुत्र यदि वा शिशिरापि लोके,
नीलद्रुमाणि विपिनानि न किं हिमानी ॥

१४. त्वां योगिनो जिन ! सदा परमात्मरूप-
मन्वेषयन्ति हृदयाम्बुज-कोशदेशे ।
पूतस्य निर्मलरुचेर्यदि वा किमन्य-
दक्षस्य संभवि पदं ननु कर्णिकायाः ॥

१५. ध्यानाज्जिनेश ! भवतो भविनः क्षणेन,
देहं विहाय परमात्मदशां व्रजन्ति ।
तीव्रानला-दुपलभावमपास्य लोके,
चामीकरत्वमचिरादिव धातुभेदाः ॥

१६. अन्तः सदैव जिन ! यस्य विभाव्यसे त्वं,
भव्यैः कथं तदपि नाशयसे शरीरम् ।
एतत्स्वरूपमथ मध्यविवर्तिनो हि,
यद्विग्रहं प्रशमयन्ति महानुभावाः ॥

१७. आत्मा मनीषिभिरयं त्वदभेदबुद्ध्या,
ध्यातो जिनेन्द्र ! भवतीह भवत्प्रभावः ।
पानीयमप्यमृतमित्यनुचिन्त्यमानं,
किं नाम नो विषविकारमपाकरोति ।।

१८. त्वामेव वीततमसं परवादिनोऽपि,
नूनं विभो हरिहरादिधिया प्रपन्नाः ।
किं काचकामलिभिरीश सितोऽपि शंखो
नो गृह्यते विविध-वर्ण-विपर्ययेण ।।

१९. धर्मोपदेशसमये सविधानुभावा-
दास्तां जनो भवति ते तरुरप्यशोकः ।
अभ्युद्गते दिनपतौ समहीरुहोऽपि,
किं वा विबोधमुपयाति न जीवलोकः ।।

२०. चित्रं विभो ! कथमवाङ्मुखवृन्तमेव
विष्वक् पतत्यविरला सुरपुष्पवृष्टिः ।
त्वद्गोचरे सुमनसां यदि वा मुनीश !
गच्छन्ति नूनमध एव हि बन्धनानि ।।

२१. स्थाने गभीरहृदयोदधिसम्भवायाः
पीयूषतां तव गिरः समुदीरयन्ति ।
पीत्वा यतः परमसम्मदसंगभाजो
भव्या व्रजन्ति तरसाऽप्यजरामरत्वम् ।।

२२. स्वामिन् ! सुदूरमवनम्य समुत्पतन्तो
मन्ये वदन्ति शुचयः सुरचामरौघाः ।
येऽस्मै नतिं विदधते मुनि-पुङ्गवाय
ते नूनमूर्ध्वगतयः खलु शुद्ध-भावाः ।।

२३. श्यामं गभीर-गिरमुज्ज्वलहेमरत्न-
सिंहासनस्थमिह भव्यशिखण्डिनस्त्वाम्
आलोकयन्ति रभसेन नदन्तमुच्चैश्-
चामीकराद्रिशिरसीव नवाम्बुवाहम् ॥

२४. उद्गच्छता तव शितिद्युतिमण्डलेन,
लुप्तच्छदच्छविरशोकतरुर्बभूव !
सांनिध्यतोऽपि यदि वा तव वीतराग !
नीरागतां व्रजति को न सचेतनोऽपि ॥

२५. भो भोः प्रमादमवधूय भजध्वमेन-
मागत्य निर्वृतिपुरीं प्रति सार्थवाहम् ।
एतन्निवेदयति देव ! जगत्त्रयाय,
मन्ये नदन्नभिनभः सुरदुन्दुभिस्ते ॥

२६. उद्योतितेषु भवता भुवनेषु नाथ !
तारान्वितो विधुरयं विहताधिकारः ।
मुक्ताकलाप-कलितोल्लसितातपत्र-
व्याजात् त्रिधा धृततनु-र्ध्रुवमभ्युपेतः ॥

२७. स्वेन प्रपूरित-जगत्त्रय-पिण्डितेन,
कान्ति - प्रताप - यशसामिव संचयेन ।
माणिक्य-हेम-रजतप्रविनिर्मितेन
साल-त्रयेण भगवन्नभितो विभासि ॥

२८. दिव्यस्रजो जिन ! नमत्-त्रिदशाधिपाना-
मुत्सृज्य रत्नरचितानपि मौलिबन्धान् ।
पादौ श्रयन्ति भवतो यदि वा परत्र,
त्वत्संगमे सुमनसो न रमन्त एव ॥

२९. त्वं नाथ ! जन्मजलधेर्विपराङ्मुखोऽपि,
यत् तारयस्यसुमतो निजपृष्ठलग्नान् ।
युक्तं हि पार्थिव-निपस्य सतस्तवैव,
चित्रं विभो ! यदसि कर्मविपाकशून्यः ॥

३०. विश्वेश्वरोऽपि जनपालक ! दुर्गतस्त्वं,
किं वाक्षर-प्रकृतिरप्यलिपिस्त्वमीश ।
अज्ञानवत्यपि सदैव कथंचिदेव,
ज्ञानं त्वयि स्फुरति विश्वविकाशहेतु ॥

३१. प्राग्भार-संभृत-नभांसि रजांसि रोषा-
दुत्थापितानि कमठेन शठेन यानि ।
छायाऽपि तैस्तव न नाथ ! हता हताशो,
ग्रस्तस्त्वमीभिरयमेव परं दुरात्मा ॥

३२. यद्गर्जदूर्जित घनौघमदभ्र-भीमं,
भ्रश्यत्-तडिन्मुसलमांसल-घोरधारम् ।
दैत्येन मुक्तमथ दुस्तरवारि दध्रे,
तेनैव तस्य जिन ! दुस्तरवारिकृत्यम् ॥

३३. ध्वस्तोर्ध्वकेश-विकृताकृति-मर्त्यमुण्ड–
प्रालम्वभृद्-भयद्-वक्त्रविनिर्यदग्निः
प्रेतव्रजः प्रतिभवन्तमपीरितो यः,
सोऽस्याभवत्प्रतिभवं भवदुःखहेतुः ॥

३४. धन्यास्त एव भुवनाधिप ! ये त्रिसन्ध्य-
माराधयन्ति विधिवद् विधुतान्यकृत्याः ।
भक्त्योल्लसत्पुलक-पक्ष्मल-देहदेशाः,
पाद-द्वयं तव विभो ! भुवि जन्मभाजः ॥

३५. अस्मिन्नपार-भववारिनिधौ मुनीश !
मन्ये न मे श्रवण-गोचरतां गतोऽसि ।
आकर्णिते तु तव गोत्रपवित्रमंत्रे,
किं वा विपद् विषधरी सविधं समेति ॥

३६. जन्मांतरेऽपि तव पादयुगं न देव !
मन्ये मया महितमीहितदान-दक्षम् ।
तेनेह जन्मनि मुनीश ! पराभवानां,
जातो निकेतनमहं मथिताशयानाम् ॥

३७. नूनं न मोहतिमिरावृतलोचनेन
पूर्वं विभो ! सकृदपि प्रविलोकितोऽसि ।
मर्माविधो विधुरयन्ति हि मामनर्थाः
प्रोद्यत्प्रबन्ध-गतयः कथमन्यथैते ॥

३८. आकर्णितोऽपि महितोऽपि निरीक्षितोऽपि
नूनं न चेतसि मया विधृतोऽसि भक्त्या ।
जातोऽस्मि तेन जनबान्धव ! दुःख पात्रं,
यस्मात्क्रियाः प्रतिफलन्ति न भावशून्याः ॥

३९. त्वं नाथ ! दुःखिजनवत्सल ! हे शरण्य !
कारुण्यपुण्यवसते ! वशिनां वरेण्य !
भक्त्या नते मयि महेश ! दयां विधाय
दुःखांकुरोद्दलन - तत्परतां विधेहि ॥

४०. निःसंख्यसारशरणं शरणं शरण्य –
मासाद्य सादितरिपु - प्रथितावदातम् ।
त्वत्पाद-पङ्कजमपि प्रणिधानवन्ध्यो,
वध्योऽस्मि चेद् भुवनपावन ! हा हतोऽस्मि ॥

४१. देवेन्द्रवन्द्य ! विदिताखिल वस्तुसार !
संसार-तारक ! विभो ! भुवनाधिनाथ !
त्रायस्व देव ! करुणाह्रद ! मां पुनीहि
सीदन्तमद्य भयदव्यसनाम्बुराशेः ।।

४२. यद्यस्ति नाथ ! भवदंघ्रिसरोरुहाणां,
भक्तेः फलं किमपि सन्तत-सञ्चितायाः ।
तन्मे त्वदेकशरणस्य शरण्य ! भूयाः
स्वामी त्वमेव भुवनेऽत्र भवान्तरेऽपि ।।

४३. इत्थं समाहितधियो विधिवज्जिनेन्द्र !
सान्द्रोल्लसत्पुलककंचुकिताङ्ग-भागाः ।
त्वद्बिम्ब-निर्मल-मुखाम्बुजबद्धलक्ष्या,
ये संस्तवं तव विभो ! रचयन्ति भव्याः ।।

४४. जननयनकुमुदचन्द्र !
प्रभास्वराः स्वर्ग-सम्पदो भुक्त्वा ।
ते विगलितमलनिचया
अचिरान्मोक्षं प्रपद्यन्ते ।।

( ८ )

## श्री रत्नाकर पंचविंशतिका

(आलोचना)

१. श्रेयः श्रियां मङ्गल-केलिसद्म !
नरेन्द्र-देवेन्द्र-नताङ्घ्रिपद्म !
सर्वज्ञ ! सर्वातिशय-प्रधान !
चिरं जय ज्ञान-कला निधान !

२. जगत्त्रयाधार ! कृपावतार !
दुर्वार-संसार-विकार-वैद्य !
श्री वीतराग ! त्वयि मुग्धभावाद्,
विज्ञ ! प्रभो ! विज्ञपयामि किंचित् ॥

३. किं वाललीलाकलितो न वालः,
पित्रोः पुरो जल्पति निर्विकल्पः ?
तथा यथार्थं कथयामि नाथ !
निजाशयं सानुशयस्तवाग्रे ॥

४. दत्तं न दानं, परिशीलितं च,
न शालि शीलं, न तपोऽभितप्तम् ।
शुभो न भावोऽप्यभवद् भवेऽस्मिन्,
विभो ! मया भ्रान्तमहो ! मुधैव ॥

५. दग्धोऽग्निना क्रोधमयेन दष्टो,
दुष्टेन लोभाख्य-महोरगेण ।
ग्रस्तोऽभिमानाजगरेण माया-जालेन,
वद्धोऽस्मि कथं भजे त्वाम् ?

शुभकेलि के आनन्द के घन के मनोहर धाम हो,
नरनाथ से सुरनाथ से पूजितचरण गतकाम हो।
सर्वज्ञ हो, सर्वोच्च हो सब से सदा संसार में,
प्रज्ञा कलाके सिन्धु हो, आदर्श हो आचार में ॥

संसार-दुःख के वैद्य हो, त्रैलोक्य के आधार हो,
जयश्रीश ! रत्नाकर प्रभो ! अनुपम कृपा-अवतार हो।
गतराग ! है विज्ञप्ति मेरी मुग्ध की सुन लीजिए,
क्योंकि प्रभो ! तुम विज्ञ हो, मुझको अभयवर दीजिए ॥

माता पिता के सामने बोली सुना कर तोतली,
करता नहीं क्या अज्ञ बालक बाल्य-वश लीलावली ?
अपने हृदय के हाल को वैसे यथोचित रीति से –
मैं कह रहा हूं, आपके आगे विनय से प्रीति से ॥

मैंने नहीं जग में कभी कुछ दान दीनों को दिया,
मैं सच्चरित भी हूँ नहीं, मैंने नहीं तप भी किया।
शुभ भावना मेरी हुई अब तक न इस संसार में,
मैं घूमता हूँ व्यर्थ ही भ्रम से भवोदधि-धार में ॥

क्रोधाग्नि में मैं रातदिन हा ! जल रहा हूँ हे प्रभो !
मैं लोभ नामक साँप से काटा गया हूँ हे विभो !
अभिमान के खल ग्राह से अज्ञानवश मैं ग्रस्त हूँ,
किस भाँति हों स्मृत आप माया-जाल में मैं व्यस्त हूँ ॥

६. कृतं मयाऽमुत्र हितं न चेह,
लोकेऽपि लोकेश ! सुखं न मेऽभूत् ।
अस्मादृशां केवलमेव जन्म,
जिनेश ! जज्ञे भव-पूरणाय ।।

७. मन्ये मनो यन्न मनोज्ञवृत्त !
त्वदास्यपीयूष मयूखलाभात् ।
द्रुतं महानन्दरसं कठोर –
मस्मादृशां देव ! तदश्मतोऽपि ।।

८. त्वत्तः सुदुष्प्राप्यमिदं मयाप्तं,
रत्नत्रयं भूरिभव-भ्रमेण ।
प्रमाद-निद्रावशतो गतं तत्,
कस्याग्रतो नायक ! पूत्करोमि ?

९. वैराग्य-रङ्गः पर-वञ्चनाय,
धर्मोपदेशो जन-रञ्जनाय ।
वादाय विद्याध्ययनं च मेऽभूत्,
कियद् ब्रुवे हास्यकरं स्वमीश !

१०. परापवादेन मुखं सदोषं,
नेत्रं परस्त्रीजन-वीक्षणेन ।
चेतः परापाय-विचिन्तनेन,
कृतं भविष्यामि कथं विभोऽहम् ?

११. विडम्बितं यत् स्मर-घस्मरार्ति –
दशावशात् स्वं विषयांधलेन ।
प्रकाशितं तद् भवतो ह्रियैव,
सर्वज्ञ ! सर्वं स्वयमेव वेत्सि ।।

लोकेश ! पर-हित भी किया मैंने न दोनों लोक में,
सुख-लेश भी फिर क्यों मुझे हो, चीखता हूं शोक में ।।
मुझ तुल्य ही नर-नारियों का जन्म जग में व्यर्थ है,
मानो जिनेश्वर ! वह भवों की पूर्णता के अर्थ है ।।

प्रभु ! आपने निज मुख-सुधा का दान यद्यपि दे दिया,
यह ठीक है, पर चित्त ने उसका न कुछ भी फल लिया ।।
आनन्द-रस में डूब कर सद्वृत्त वह होता नहीं,
है वज्र-सा मेरा हृदय, कारण बड़ा बस है यही ।।

रत्नत्रयी दुष्प्राप्य है, प्रभु से उसे मैंने लिया,
बहुकाल तक बहुबार जब जग का भ्रमण मैंने किया,
हा ! खो गया वह भी अलस, मैं नींद में सोता रहा,
अब बोलिए उसके लिये रोऊँ प्रभो ! किसके यहां ?

संसार ठगने के लिये वैराग्य को धारण किया ।
जग को रिझाने के लिये उपदेश धर्मों का दिया ।
झगड़ा मचाने के लिये मम जीभ पर विद्या बसी,
निर्लज्ज हो कितनी उड़ाई, हे प्रभो ! अपनी हँसी ।।

पर दोष को कह जीभ मेरी है सदा दूषित हुई,
लखकर पराई नारियाँ हा ! आंख भी दूषित हुई ।
मन भी मलिन है सोच कर पर की बुराई हे प्रभो !
किस भाँति होगी लोक में मेरी भलाई ऐ विभो !

मैंने बढ़ाई निज विवशता, हो अवस्था के वशी,
भक्षक रतीश्वर से हुई उत्पन्न जो दुख राक्षसी ।
हा ! आपके सम्मुख उसे अति लाज से प्रकटित किया,
सर्वज्ञ ! हो सब जानते स्वयमेव संसृति की क्रिया ।।

१२. ध्वस्तोऽन्य-मंत्रैः परमेष्ठिमंत्रः,
कुशास्त्रवाक्यैर् निहतागमोक्तिः ।
कर्तुं वृथा कर्म कुदेवसङ्गा-
दवाञ्छि ही नाथ ! मतिभ्रमो मे ।।

१३. विमुच्य दृग्लक्ष्यगतं भवन्तं,
ध्याता मया मूढ़धिया हृदन्तः ।
कटाक्ष-वक्षोज-गभीर-नाभि-
कटीतटीयाः सुदृशां विलासाः ।।

१४. लोलेक्षणावक्त्र निरीक्षणेन,
यो मानसे रागलवो विलग्नः ।
न शुद्धसिद्धान्त-पयोधिमध्ये,
धौतोऽप्यगात् तारक ! कारणं किम् ।।

१५. अंगं न चंगं न गणो गुणानां,
न निर्मलः कोऽपि कलाविलासः ।
स्फुरत्प्रभा न प्रभुता च काऽपि,
तथाऽप्यहंकार-कदर्थितोऽहम् ।।

१६. आयुर्गलत्याशु न पापबुद्धिर्,
गतं वयो नो विषयाभिलाषः ।
यत्नश्च भैषज्य-विधौ न धर्मे,
स्वामिन् ! महामोह-विडम्बना मे ।।

१७. नात्मा न पुण्यं न भवो न पापं,
मया विटानां कटुगीरपीयम् ।
आधारि कर्णे त्वयि केवलार्के,
परिस्फुटे सत्यपि देव ! धिग्माम् ।।

अन्यान्य मंत्रों से परम परमेष्ठि मन्त्र हटा दिया,
सच्छास्त्र वाक्यों को कुशास्त्रों से दबा मैंने दिया।
विधि उदय को करने वृथा, मैंने कुदेवाश्रय लिया,
हे नाथ यों भ्रमवश अहित, मैंने नहीं क्या-क्या किया ?

हा तज दिया मैंने प्रभो ! प्रत्यक्ष पाकर आपको,
आराधना की मूढ़तावश मूढ़ लोगों की विभो !
वामांगियों के कुच कटाक्षों पर सदा मरता रहा,
उनके विलासों का हृदय में ध्यान मैं धरता रहा ॥

लखकर चपल दृग युवतियों के मुख मनोहर रसमयी,
मम मन पटल पर राग-भावों की मलिनता बस गई।
वह शास्त्र निधि के शुद्ध जल से, भी न क्यों धोई गई,
बतलाइये प्रभु आपही, मम बुद्धि तो खोई गई ॥

मुझ में न अपने अंग के सौंदर्य का आभास है,
मुझमें न गुण-गण है विमल, मुझमें न कला–विलास है।
प्रभुता न मुझ में स्वप्न की भी है चमकती देखिये,
तो भी भरा हूँ गर्व से मैं मूढ़ हो किसके लिये ॥

हा ! नित्य घटती आयु है पर पाप-मति घटती नहीं,
आई बुढ़ौती पर विषय अरु वासना हटती नहीं।
मैं यत्न करता हूँ दवा में, धर्म में करता नहीं,
दुर्मोह-महिमा से ग्रसित हूँ, नाथ ! बच सकता नहीं ॥

अघ पुण्य को, जग, आत्म को मैंने कभी माना नहीं,
हा ! आप आगे हैं खड़े सर्वज्ञ रवि यद्यपि यहीं।
तो भी खलों के वाक्य को मैंने सुना कानों वृथा,
धिक्कार मुझको है गया, मम जन्म ही मानो वृथा ॥

१८. न देव पूजा न च पात्रपूजा,
न श्राद्धधर्मश्च न साधुधर्मः ।
लब्ध्वाऽपि मानुष्यमिदं समस्तं,
कृतं मयारण्य-विलापतुल्यम् ।।

१९. चक्रे मयाऽसत्स्वपि कामधेनु-
कल्पद्रु-चिन्तामणिषु स्पृहार्तिः ।
न जैनधर्मे स्फुटशर्मदेऽपि,
जिनेश ! मे पश्य विमूढ़भावम् ।।

२०. सद्भोग–लीला न च रोगकीला,
धनागमो नो निधनागमश्च ।
दारा न कारा नरकस्य चित्ते,
व्यचिन्ति नित्यं मयकाऽधमेन ।

२१. स्थितं न साधोर्हृदि साधुवृत्तात्,
परोपकारान्न यशोर्जितं च ।
कृतं न तीर्थोद्धरणादि-कृत्यं,
मया मुधा हारितमेव जन्म ।।

२२. वैराग्यरङ्गो न गुरूदितेषु,
न दुर्जनानां वचनेषु शान्तिः ।
नाऽध्यात्मलेशो मम कोऽपिदेव,
तार्यः कथंकारमयं भवाब्धिः ?

२३. पूर्वे भवेऽकारि मया न पुण्य-
मागामि जन्मन्यपि नो करिष्ये ।
यदीदृशोऽहं मम तेन नष्टा,
भूतोद्भवद्भावि-भवत्रयीश !

सत्पात्र-पूजन देव-पूजन कुछ नहीं मैंने किया,
मुनि धर्म श्रावक धर्म, भी विधिवत् नहीं पालन किया।
नर-जन्म पाकर भी वृथा ही, मैं उसे खोता रहा,
मानो अकेला घोर वन में व्यर्थ ही रोता रहा ॥

प्रत्यक्ष सुखकर जैन मत में, प्रीति मेरी थी नहीं,
जिननाथ ! मेरी देखिये, है मूढ़ता भारी यही।
हा ! कामधुक् कल्पद्रुमादिक, के यहाँ रहते हुए,
मैंने गंवाया जन्म को, धिक् लाख-दुःख सहते हुए ॥

मैंने न रोका रोग-दुःख, संभोग-सुख देखा किया,
मन में न माना मृत्यु-भय, धन-लाभ का लेखा किया।
हा ! मैं अधम पुद्गल सुखों का, ध्यान नित करता रहा,
पर नरक-कारागर से, मन में न मैं डरता रहा ॥

सद्वृत्ति से मन में न मैंने, साधुता हा ! साधिता,
उपकार करके कीर्ति भी, मैंने नहीं कुछ अर्जिता।
चउ तीर्थ के उद्धार आदिक, कार्य कर पाया नहीं,
नर-जन्म पारस-तुल्य निज, मैंने गंवाया व्यर्थ ही ॥

शास्त्रोक्त-विधि वैराग्य भी, करना मुझे आता नहीं,
खल-वाक्य भी गत-क्रोध हो, सहना मुझे आता नहीं।
अध्यात्म-विद्या है न मुझमें, है न कोई सत्कला,
फिर देव ! कैसे यह भवोदधि पार होवेगा भला ॥

सत्कर्म पहले जन्म में, मैंने किया कोई नहीं,
आशा नहीं जन्मान्य में, उसको करूंगा मैं कहीं।
इस भांति का यदि हूँ जिनेश्वर ! क्यों न मुझको कष्ट हो ?
संसार में फिर जन्म मेरे, त्रिविध कैसे नष्ट हों ॥

२४. किं वा मुधाऽहं वहुधा सुधाभुक्-
पूज्य ! त्वदग्रे चरितं स्वकीयम् ?
जल्पामि यस्मात् त्रिजगत्स्वरूप-
निरूपकस्त्वं कियदेतदत्र ?

२५. दीनोद्धार-धुरंधरस्त्वदपरो,
नास्ते मदन्यः कृपा-
पात्रं नाऽत्र जने जिनेश्वर ! तथा-
ऽप्येतां न याचे श्रियम् ।
किंत्वर्हन्निदमेव केवलमहो,
सद्बोधि-रत्नं शिवं ।
श्री रत्नाकर-मंगलैकनिलय !
श्रेयस्करं प्रार्थये ॥



हे पूज्य ! अपने चरित को, वहुभाँति गाऊं क्या वृथा
कुछ भी नहीं तुझ से छिपी है पापमय मेरी कथा।
क्योंकि त्रिजग के रूप हो तुम, ईश हो सर्वज्ञ हो,
पथ के प्रदर्शक हो तुम्हीं, मम चित्त के मर्मज्ञ हो॥

दीनोद्धारक धीर आप सा अन्य नहीं है,
कृपा-पात्र भी नाथ ! न मुझसा अपर कहीं है।
तो भी मांगू नहीं धान्य धन कभी भूल कर,
अर्हन् ! केवल बोधिरत्न दें मुझे मंगल-कर॥
श्री रत्नाकर गुण-गान यह दुरित दुःख सब के हरे।
अब एक यही है प्रार्थना मंगल मय जग को करे॥

( ६ )

## श्री परमात्म-द्वात्रिंशिका

(आचार्य अमितगति)

१. सत्त्वेषु मैत्रीं गुणिषु प्रमोदं, क्लिष्टेषु जीवेषु कृपापरत्वम् ।
माध्यस्थ्यभावं विपरीत-वृत्तौ, सदा ममात्मा विदधातु देव !

२. शरीरतः कर्तुमनन्तशक्तिं, विभिन्नमात्मानमपास्तदोषम् ।
जिनेन्द्र ! कोषादिव खड्गयष्टिं, तव प्रसादेन ममास्तु शक्तिः ।।

३. दुःखे सुखे वैरिणि बन्धुवर्गे, योगे वियोगे भवने वने वा ।
निराकृताशेषममत्वबुद्धेः, समं मनो मेऽस्तु सदाऽपि नाथ !

४. मुनीश ! लीनाविव कीलिताविव,
स्थिरौ निखाताविव बिम्बिताविव ।
पादौ त्वदीयौ मम तिष्ठतां सदा,
तमो धुनानौ हृदि दीपकाविव ।।

५. एकेन्द्रियाद्या यदि देव ! देहिनः,
प्रमादतः संचरता यतस्ततः ।
क्षता विभिन्ना मिलिता निपीड़िता,
ममास्तु मिथ्या दुरनुष्ठितं तदा ।।

६. विमुक्ति-मार्ग-प्रतिकूल-वर्तिना, मया कषायाक्षवशेन दुर्धिया ।
चारित्र-शुद्धेर्यदकारि लोपनं, तदस्तु मिथ्या मम दुष्कृतं विभो !

७. विनिन्दनालोचन-गर्हणैरहं, मनोवचःकाय-कषायनिर्मितम् ।
निहन्मि पापं भवदुःखकारणं, भिषग् विषं मंत्र गुणैरिवाखिलम् ।।

८. अतिक्रमं यं विमतेर्व्यतिक्रमं, जिनातिचारं स्वचरित्र-कर्मणः ।
व्यधामनाचारमपि प्रमादतः, प्रतिक्रमं तस्य करोमि शुद्धये ।।

९. क्षतिं मनः शुद्धिविधेरतिक्रमं, व्यतिक्रमं शीलवृतेर्विलंघनम् ।
प्रभोऽतिचारं विषयेषु वर्तनं, वदन्त्यनाचारमिहातिसक्तताम् ।।

१०. यदर्थमात्रा-पद-वाक्यहीनं, मया प्रमादाद् यदि किंचनोक्तम् ।
तन्मे क्षमित्वा विदधातु देवी, सरस्वती केवल-वोधलब्धिम् ।।

११. वोधिः समाधिः परिणामशुद्धिः, स्वात्मोपलब्धिः शिवसौख्यसिद्धिः ।
चिन्तामणिं चिन्तितवस्तुदाने, त्वां वन्द्यमानस्य ममास्तु देवि ! ।।

१२. यः स्मर्यते सर्व-मुनीन्द्र-वृन्दैर्, यः स्तूयते सर्वनरामरेन्द्रैः ।
यो गीयते वेद-पुराणशास्त्रै, स देवदेवो हृदये ममास्ताम् ।।

१३. यो दर्शन-ज्ञान-सुखस्वभावः, समस्त संसार-विकार-वाह्यः ।
समाधिगम्यः परमात्म-संज्ञः, स देवदेवो हृदये ममास्ताम् ।।

१४. निषूदते यो भवदुःखजालं, निरीक्षते यो जगदन्तरालम् ।
योऽन्तर्गतो योगि-निरीक्षणीयः, स देवदेवो हृदये ममास्ताम् ।।

१५. विमुक्ति मार्ग-प्रतिपादको यो, यो जन्म-मृत्युर्व्यसनाद् व्यतीतः ।
त्रिलोकलोकी सकलोऽकलंकः, स देवदेवो हृदये ममास्ताम् ।।

१६. क्रोडीकृताशेष-शरीरि-वर्गा, रागादयो यस्य न सन्ति दोषाः ।
निरीन्द्रियो ज्ञानमयोऽनपायः, स देवदेवो हृदये ममास्ताम् ।।

१७. यो व्यापको विश्वजनीन-वृत्तिः, सिद्धो विवुद्धोधुतकर्मवन्धः ।
ध्यातो धुनीते सकलं विकारं, स देवदेवो हृदये ममास्ताम् ।।

१८. न स्पृश्यते कर्मकलंक दोषैर्, यो ध्वान्तसंघैरिव तिग्मरश्मिः ।
निरंजनं नित्यमनेकमेकं, तं देवमाप्तं शरणं प्रपद्ये ।।

१९. विभासते यत्र मरीचिमाली, न विद्यमाने भुवनावभासी ।
स्वात्मस्थितं वोधमय-प्रकाशं, तं देवमाप्तं शरणं प्रपद्ये ।।

२०. विलोक्यमाने सति यत्र विश्वं, विलोक्यते स्पष्टमिदं विविक्तम् ।
शुद्धं शिवं शान्तमनाद्यनन्तं, तं देवमाप्तं शरणं प्रपद्ये ।।

२१. येन क्षता मन्मथ-मान-मूर्छा, विषाद-निद्रा-भयशोक-चिन्ताः ।
क्षयानलेनेव तरु-प्रपंचस्, तं देवमाप्तं शरणं प्रपद्ये ।।

२२. न संस्तरोऽश्मा न तृणं न मेदिनी,
विधानतो नो फलको विनिर्मितः।
यतो निरस्ताक्ष-कषायविद्विषः,
सुधीभिरात्मैव सुनिर्मलो मतः ॥

२३. न संस्तरो भद्र ! समाधि-साधनं, न लोकपूजा न च संघमेलनम् ।
यतस्ततोऽध्यात्मरतो भवानिशं, विमुच्य सर्वामपि वाह्यवासनाम् ॥

२४. न सन्ति बाह्या मम केचनार्था, भवामि तेषां न कदाचनाऽहम् ।
इत्थं विनिश्चित्य विमुच्य वाह्यं, स्वस्थः सदा त्वं भव भद्र! मुक्त्यै ॥

२५. आत्मानमात्मन्यवलोक्यमानस्, त्वं दर्शनज्ञानमयो विशुद्धः ।
एकाग्रचित्तः खलु यत्र तत्र, स्थितोऽपि साधुर्लभते समाधिम् ॥

२६. एकः सदा शाश्वतिको ममात्मा, विनिर्मलः साधिगमस्वभावः ।
वहिर्भवाः सन्ति परे समस्ता, न शाश्वताः कर्मभवाः स्वकीयाः ॥

२७. यस्यास्ति नैक्यं वपुषाऽपि सार्द्धं, तस्यास्ति किं पुत्र-कलत्र-मित्रैः ?
पृथक् कृते चर्मणि रोमकूपाः, कुतो हि तिष्ठन्ति शरीर-मध्ये ॥

२८. संयोगतो दुःखमनेकभेदं, यतोऽश्नुते जन्मवने शरीरी ।
ततस्त्रिधाऽसौ परिवर्जनीयो, यियासुना निर्वृतिमात्मनीनाम् ॥

२९. सर्वं निराकृत्य विकल्पजालं, संसार-कान्तार-निपातहेतुम् ।
विविक्तमात्मानमवेक्षमाणो, निलीयसे त्वं परमात्मतत्त्वे ॥

३०. स्वयं कृतं कर्म यदात्मना पुरा, फलं तदीयं लभते शुभाशुभम् ।
परेण दत्तं यदि लभ्यते स्फुटं, स्वयं कृतं कर्म निरर्थकं तदा ॥

३१. निजार्जितं कर्म विहाय देहिनो, न कोऽपि कस्याऽपि ददाति किंचन ।
विचारयन्नेवमनन्यमानसः, परो ददातीति विमुंच शेमुषीम् ॥

३२. यैः परमात्माऽमितगतिवन्द्यः, सर्वविविक्तो भृशमनवद्यः ।
शाश्वदधीतो मनसि लभन्ते, मुक्तिनिकेतं विभववरं ते ॥

( १० )

## श्री ऋषभदेव स्तोत्र

१. आदिजिनं वंदे गुणसदनं, सदनन्तामल-बोधं रे!
बोधकता-गुणविस्तृतकीर्ति, कीर्त्तित-पथमविरोधं रे-आदि० ॥

२. रोधरहित-विस्फुरदुपयोगं, योगं दधतमभंगं रे!
भंगं नय-व्रज-पेशलवाचं, वाचंयम-सुख-संगं रे-आदि० ॥

३. संगतपद-शुचि-वचनतरंगं, रंगं जगति ददानं रे!
दान-सुरद्रुम-मंजुलहृदयं, हृदयंगम-गुण - भानं रे-आदि० ॥

४. भानन्दित-सुर-नर-पुन्नागं, नागर-मानस-हंसं रे!
हंसगतिं पंचम-गतिवासं, वासव-विहिताशंसं रे-आदि० ॥

५. शंसन्तं नयवचनमनवमं, नव-मंगल-दातारं रे!
तारस्वरमघघनपवमानं, मान-सुभट-जेतारं रे-आदि० ॥

६. इत्थं स्तुतः प्रथमतीर्थपतिः प्रमोदात्,
श्री मद्-यशोविजय-वाचकपुंगवेन ।
श्री पुण्डरीक-गिरिराज-विराजमानो,
मानोन्मुखानि वितनोतु सतां सुखानि ॥

( ११ )

## श्री पार्श्वनाथ स्तोत्र

(वाचक यशोविजय-विरचित)

१. ॐ नमः पार्श्वनाथाय, विश्व-चिन्तामणीयते ।
ह्रीं धरणेंद्र - वैरोट्या-पद्मादेवी-युतायते ॥

२. शांति - तुष्टि - महापुष्टि - धृतिकीर्तिविधायिने ।
ॐ ह्रीं द्विड्-व्याल-वेताल-सर्वाधिव्याधिनाशिने ॥

३. जया जिताख्या विजयाख्याऽपराजितयान्वितः ।
दिशां पालैर्ग्रहैर्यक्षैर्' विद्यादेवीभिरन्वितः ॥

४. ॐ असिआउसाय नमस्-तत्र त्रैलोक्यनाथताम् ।
चतुः षष्टि-सुरेन्द्रास्ते, भासन्ते छत्र-चामरैः ॥

५. श्री शंखेश्वरमण्डनपार्श्वजिन ! प्रणतकल्पतरुकल्प !
चूरय दुष्टव्रातं, पूरय मे वाञ्छितं नाथ !



( १२ )

## सर्वजिन स्तोत्र

(आचार्य कनकप्रभ)

१. जयति जंगम-कल्पमहीरुहो,
जयति दुःखमहार्णवतारकः ।
जयति विश्वसनातनदीपको,
जयति भूतल-शीतरुचिर्जिनः ।।

२. जयति कोपदवानल-नीरदो,
जयति मान-महीरुह-कुंजरः ।
जयति कूटकुडंगि-हिमागमो,
जयति लोभमहोदधि-मन्दरः ।।

३. विजयते जगदेकविलोचनो,
विजयते निरुपाधिक बान्धवः ।
विजयते भवरोग-चिकित्सको,
विजयते शिव-पत्तन-पण्डितः ।।

४. जयति मारविकार-निशाकर-
प्रसर – संवरणैकदिवाकरः ।
जयति संसृतिकाननसम्भ्रम,
भ्रमण – खिन्नजनैकसुधासरः ।।

५. विषय पंकिलमोहजलोल्लसद्,
वहुलराग - तरंग - भराकुले ।
विजयते विपुले भवपल्वले,
कमलमेकमहो जिन-पुंगवः ।।

( १३ )

## श्री वज्रपंजर स्तोत्र

१. परमेष्ठिनमस्कारं, सारं नवपदात्मकम् ।
आत्मरक्षाकरं वज्र-पञ्जराभं स्मराम्यहम् ।।

२. ॐ नमो अरिहंताणं, शिरस्कं शिरसि स्थितम् ।
ॐ नमो सव्वसिद्धाणं, मुखे मुखपटं वरम् ।।

३. ॐ नमो आयरियाणं, अंगरक्षाऽतिशायिनी ।
ॐ नमो उवज्झायाणं, आयुधं हस्तयोर्दृढम् ।।

४. ॐ नमो लोए सव्वसाहूणं, मोचके पादयोः शुभे ।
एसो पंच-नमुक्कारो, शिला वज्रमयी तले ।।

५. सव्वपाव-प्पणासणो, वप्रो वज्रमयो वहिः ।
मंगलाणं च सव्वेसिं, खादिराङ्गारखातिका ।।

६. स्वाहान्तं च पदं ज्ञेयं, पढमं हवइ मंगलं ।
वप्रोपरि वज्रमयं, पिधानं देह रक्षणे ।।

७. महाप्रभावा रक्षेयं, क्षुद्रोपद्रव-नाशिनी ।
परमेष्ठिपदोद्भूता, कथिता पूर्वसूरिभिः ।।

८. यश्चैवं कुरुते रक्षां, परमेष्ठि-पदैः सदा ।
तस्य न स्याद् भयं व्याधिराधिश्चापि कदाचन ।।

( १४ )

## घंटाकर्ण मन्त्र

१. ॐ घंटाकर्णो महावीरः सर्वव्याधि-विनाशकः ।
विस्फोटकभयं प्राप्ते, रक्ष-रक्ष महाबलः ॥

२. यत्र त्वं तिष्ठसे देव, लिखितोऽक्षर पंक्तिभिः ।
रोगास्तत्र प्रणश्यन्ति, वातपित्तकफोद्भवाः ॥

३. तत्र राजभयं नास्ति, यान्ति कर्णेजपात्क्षयम् ।
शाकिनी भूतवेताला, राक्षसाः प्रभवन्ति नो ॥
नाकाले मरणं तस्य, न च सर्पेण दश्यते ।
अग्निचौरभयं नास्ति, ॐ ह्रीं श्रीं घंटाकर्ण !
नमोस्तु ते ! ॐ नर वीर ! ठः ठः ठः स्वाहा ! !

---

## धर्म-महिमा

यस्मिन्नैव पिता हिताय यतते, भ्राता च माता सुतः ।
सैन्यं दैन्यमुपैति चापचपलं, यत्राफलं दोर्बलम् ॥
तस्मिन्कष्टदशाविपाकसमये, धर्मस्तु संवर्द्धितः ।
सज्जः सत्वरमैव सर्वजगतस्त्राणाय वद्धोद्यमः ॥

( १५ )

## सोलह सती स्तोत्र

१. आदौ सती सुभद्रा च, पातु पश्चात्तु सुन्दरी,
ततश्चन्दनबाला च, सुलसा च मृगावती।

२. राजीमती ततश्चूला, दमयन्ती ततः परम्,
पद्मावती शिवा सीता, ब्राह्मी पुनश्च द्रौपदी।

३. कौशल्या च ततः कुन्ती, प्रभावती सतीवरा,
सतीनामांक – यंत्रोऽयं, चतुस्त्रिंशत् समुद्भवः।

४. यस्य पार्श्वे सदा यन्त्रो, वर्तते तस्य साम्प्रतम्,
भूरिनिद्रा न चायाति, नायान्ति भूतप्रेतकाः।

५. ध्वजायां नृपतेर्यस्य, यन्त्रोऽयं वर्तते सदा,
तस्य शत्रुभयं नास्ति संग्रामेऽस्य जयः सदा।

६. गृहद्वारे सदा यस्य यन्त्रोऽयं ध्रियते वरः,
कार्मणादिकतन्त्रैश्च, न स्यात् तस्य पराभवः।

७. स्तोत्रं सतीनां सुगुरुप्रसादात्, कृतं मयोद्योत-मृगाधिपेन,
यः स्तोत्रमेतत् पठति प्रभाते, स प्राप्नुते शं सततं मनुष्यः।

( १६ )

## श्री सती-यंत्र

| | | | |
|---|---|---|---|
| ९ | १६ | २ | ७ |
| ६ | ३ | १३ | १२ |
| १५ | १० | ८ | १ |
| ४ | ५ | ११ | १४ |

( १७ )

## मंगल भावना

१. जिने भक्तिर्जिने भक्तिर्जिने भक्तिः सदास्तु मे,
सम्यक्त्वमेव संसार - वारणं मोक्षकारणम् ।

२. श्रुते भक्तिः श्रुते भक्तिः, श्रुते भक्तिः सदास्तु मे,
सज्ज्ञानमेव संसार - वारणं मोक्षकारणम् ।

३. गुरौ भक्तिर् गुरौ भक्तिर्, गुरौ भक्तिः सदास्तु मे,
चारित्रमेव संसार - वारणं मोक्षकारणम् ।

( १८ )

## श्री सरस्वती स्तोत्र

१. धिषणा धीर्मतिर्मेधा, वाग् विभवा सरस्वती ।
गीर्वाणी भारती भाषा, ब्रह्माणी मागध - प्रिया ।।

२. सर्वेश्वरी महागौरी, शंकरी भक्त - वत्सला ।
रौद्री चांडालिनी चंडा, भैरवी वैष्णवी जया ।।

३. गायत्री च चतुर्बाहुः, कुमारी परमेश्वरी ।
देवमाताऽक्षया चैव, नित्या त्रिपुर - भैरवी ।।

४. त्रैलोक्य-स्वामिनी देवी, शंदा कारुण्य-सूत्रिणी ।
शूलिनी पद्मिनी रुद्रा, लक्ष्मी पंकज - वासिनी ।।

५. चामुंडा खेचरी शांता, हुंकारा चन्द्र - शेखरा ।
वाराही विजया तर्का, कर्त्री हर्त्री, सुरेश्वरी ।।

६. चंद्रानना जगद्धात्री, वीणांबुज - कर - द्वया ।
सुभगा सर्वगा स्वाहा, जंभिनी स्तंभिनीश्वरी ।।

७. काली कपालिनी कौली, विज्ञा राज्ञी त्रिलोचना ।
पुस्तक-व्यग्र-हस्ता च, योगिन्यमितविक्रमा ।।

८. सर्व-सिद्धिकरी संज्ञा, खड्गिनी कामरूपिणी ।
सर्व-सत्त्व-हिता प्राज्ञा, शिवा शुक्ला मनोरमा ।।

९. मांगल्या रूचिराकारा, धन्या काननवासिनी ।
अज्ञाननाशिनी जैनी, अज्ञान-निशि-भास्करा ।।

१०. अज्ञान - जन - माता त्व - मज्ञानोदधि - शोषिणी ।
ज्ञानदा निर्मदा गंगा, शीता वागीश्वरी धृतिः ।।

११. ऐंकार-मस्तका प्रीतिः, ह्लींकार वदनाहुतिः ।
क्लींकार-हृदया सष्टिरष्ट-वीजा निराकृतिः ।।

१२. निरामया जगत्संस्था, निष्प्रपंचा चलाचला ।
निरुत्पन्ना समुत्पन्ना, चानन्ता गगनोपमा ।।

१३. पठत्यमूनि नामानि, अष्टोत्तर शतानि यः ।
वत्से धेनुरिवायाति, तस्मिन् देवी सरस्वती ।।

१४. त्रिकालं च शुचिर्भूत्वा, ह्यष्ट-मासान् निरन्तरं ।
पठतो सौख्य-समृद्धिर्जायते कविषु यशः ।।

द्रुहिण-वदन-पद्मे, राजहंसीव शुभ्रा ।
सकलकलुषवल्ली-कंद-कुद्दाल कल्पा ।
अमर-शतनुतांघ्रीः, कामधेनुः कवीनां ।
दहतु कमल-हस्ता, भारती कल्मषं मे ।

( १६ )

## श्री ऋषभ स्तोत्र

१. सुरवरेश नरेश शिरोमणि-प्रकट संघटित क्रम-पंकजम् ।
पढम तित्थयरं रिसहेसरं, तह कहं थुणिमो मुणिमो जहा ।।

२. विमल-नाभि-नरेश-कुलांवर-प्रकटनैकविभाभर भासुर !
वहु भवज्जिय कम्मतमोभरं, हण पहो भुवविक्क पहायर ।।

३. जन-मनः कुमुदाकर वोधन-प्रणव पार्वण-चन्द्र-समानन !
तुह पलोयणओ मह माणसं, हरिस संभरियं जलही जहा ।।

४. जगदनर्घ्य-गुण-प्रगुणैकधी-धनवशीकृत-विश्व-मनोरथ !
भुवण वंछिय कप्पतरूसया-मह जिणेसर देहि समीहियं ।।

५. सदुपदेशसुधारस-दूरिता-खिल महीतल दुःख दवानल !
तियस-नाह-निसेविय मे पहो ! कुणसु दुग्गइ दुक्ख निवारणं ।।

६. शशि सुधारस कुंद समुज्वल-स्फुट यशो विशदी कृत दिग्गज !
महमणो वि तहा नणु तेण किं, नहु भवे गरुयाण सु-संगओ ।।

७. सुजननी-मरुदेवि-सुधाभृतो-दर-सरोवरतामरसोपम !
तुह मुहे रिसहेस पुणो पुणो, रमइ मे नयणं भमरोवमं ।।

८. शम-सुधारस-पान-निराकृत-प्रवल-मोह-महाविष-विप्लव !
तयणु देहि पहो निरुवद्दवं, सिवसुहं वसुहा-सुह-दायग ।।

९. यः संस्कृत प्राकृत भाषया स्तवं, शत्रुंजय श्री हृदयाधिपस्य ।
कंठे विधत्ते मणि-मालिकोपमं, सदाशिवश्रीः श्रयति स्वयं तम् ।।

१०. इत्थं प्रभु श्री जयचन्द्रसुरि-शिष्याणुना संस्तुतपादपद्मः ।
श्री नाभि-राजेन्द्र-कुलावतंशो, देवो सुदेवोऽस्तु युगादिनाथः ।।

( २० )

## श्री श्रुतदेवी-सरस्वती-स्तोत्र

१. कल-मराल-विहङ्गम:वाहना, सित-दुकूल-विभूपण-भूषिता ।
प्रणत-भूमिरुहामृत-सारिणी, प्रवर-देह-विभाम्वर-धारिणी ।।

२. अमृत-पूर्ण-कमण्डलु-धारिणी, त्रिदश-दानव-मानव-सेविता ।
भगवती परमैव सरस्वती, मम पुनातु सदा नयनाम्बुजे ।।

३. जिनपति-प्रथिताखिल-वाङ्मयी, गणधराऽनन-मण्डलनर्तकी ।
गुरु-मुखाम्बुज-खेलन-हँसिका, विजयते जगती श्रुति-देवता ।।

४. अमृत-दीधिति-बिम्ब-समाननां, त्रिजगती निर्मित माननाम् ।
नवरसामृत-वीचि-सरस्वतीं, प्रमुदित: प्रणमामि सरस्वतीम् ।।

५. वितत-केतकि-पत्र-विलोचने, विहित-संस्कृत-दुष्कृत-मोचने ।
धवल-पक्ष-विहङ्गम-लांछिते, जय सरस्वति पूरित-वांछिते ।।

६. भवदनुग्रह-लेश-तरंगिता-स्तदुचितं प्रवदंति विपश्चित: ।
नृपसभा-सुजिता: कमलावला, कुचकला-कलनानि वितन्वते ।।

७. गतधना अपिहि त्वदनुग्रहात्, कलित-कोमल-वाक्य-सुधोर्मय: ।
चकित-बालकुरंगमलोचना, जन-मनांसि हरन्ति-तरां नरा: ।।

८. करसरोरुह-खेलन-चंचला, तव विभाति वरा जप-मालिका ।
श्रुत-पयोनिधि-मध्य-पिकस्वरा: जल-तरङ्ग-कलाग्रह-संग्रहा ।।

९. द्विरद-केसरि-मारि-भुजंगमाऽपसद-तस्करराज-रुजां भयम् ।
तव गुणाऽवलिगान-तरंगिणां, न भविनां भवति श्रुतदेवते ! ।।

१०. ॐ ह्रीं क्लीं ब्लूं ततः श्री तदनुह सकलां ह्रीं मथो ऐं नमो ते ।
लक्षं साक्षाज्जपेद्यः कर-शुभ-विधिना[1] सत्तपो ब्रह्मचारी ॥
निर्यान्तीं चन्द्र-बिम्बात् कलयति मनसा त्वां जगच्चन्द्रिकाऽऽभाम् ।
सत्यं तद् ब्रह्मकुण्डे विहित-व्रत-विधिः स्यादशङ्कः स विद्वान् ॥

११. रे रे लक्षण-काव्य-नाटक-कथा चंपू-समालोकने ।
क्वायासं वितनोति बालिश ! मुधा किं नम्र-वक्त्राम्बुजः ॥
भक्त्याऽऽराधय मंत्रराज मनिशं, स्याद् भारती तोषिता ।
तेन त्वं कविता-वितान-सविता-द्वैत प्रबुद्धो भव ॥

१२. चञ्चच्चन्द्रमुखी-प्रसिद्ध-महिमा, स्वच्छंद-राज्यप्रदा-
नायासेन सुरासुरेश्वर-गणैरभ्यर्चिता भावतः ॥
देवी संस्तुत-वैभवा मलयजा, लेपांग-रागद्युतिः ।
सा मां पातु सरस्वती भगवती, त्रैलोक्यसञ्जीविनी ॥
स्तवनमेतदनेकगुणान्वितं, पठति यो मनुजः प्रमुदा प्रगे ।
स सहसा मधुरैर्वचनामृतैर्नृपगणानपि रञ्जयति स्फुटम् ॥

---

[1] करस्य करयोर्वा या शुभा विधि-तेन-करशुभविधिना-इत्यर्थः

( २१ )

## श्री चतुर्विंशति स्तोत्र

१. वन्दे धर्म-जिनं सदा सुखकरं, चन्द्रप्रभं नाभिजं ।
श्रीमद् वीर-जिनेश्वरं जयकरं, कुन्थुं च शान्ति जिनम् ।।
मुक्ति-श्री-फलदाय्यनन्तमुनिपं, वन्दे सुपार्श्वं विभुं ।
श्रीमन्मेघनपात्मजं च सुखदं, पार्श्वं मनोऽभीष्टदम् ।।

२. श्री नेमीश्वरसुव्रतौ च विमलं, पद्मप्रभं सांवरं ।
सेवे संभव-शङ्करं नमिजिनं, मल्लिं जयानन्दनम् ।।
वन्दे श्री जिन-शीतलं च सुविधिं, सेवेऽजितं मुक्तिदं ।
श्री संघं त्वथ पञ्चविंशतितमं, साक्षादरं वैष्णवम् ।।

३. स्तोत्रं सर्व-जिनेश्वरैरभिगतं, मन्त्रेषु मंत्रं वरं ।
एतत्सङ्गतयन्त्र एव विजयो, द्रव्यैर्लिखित्वा शुभैः ।।
पार्श्वे सन्ध्रियमाण एव सुखदो माङ्गल्यमालाप्रदो ।
वामाङ्गे वनिता नरास्तदितरे, कुर्वन्ति ये भावतः ।।

४. प्रस्थाने स्थिति-युद्ध-वाद-करणे, राजादिसन्दर्शने,
वश्यार्थे सुतहेतवे धनकृते, रक्षन्तु पार्श्वे सदा ।
मार्गे संविषमे दवाग्निज्वलिते, चिन्तादि-निर्नाशने,
यन्त्रोऽयं मुनिनेत्रसिंह कविना, संग्रन्थितः सौख्यदः ।।

( २२ )

## श्री चक्रेश्वरी स्तोत्र

१. श्री चक्रेश्वरि ! चक्रचुम्बितकरे ! चंचच्चलत्-कुंडला–
लंकारकृत-मस्तकोरु-मुकुटे, ग्रैवेयकालंकृते ।।
स्फारोदार-भुजाग्र भूषणकरे, सन्नूपुरैः वंधुरे ।
मातर्मां तनयं स्वमिष्टविनयं, त्रायस्व संत्रासतः ।।

२. श्री चक्रेश्वरि ! चन्द्रमंडलमिव ध्वस्तांधकारोत्करं ।
भव्य-प्राणि-चकोर-चुम्बितकरं संतापसंपद्धरम् ।।
सम्यग्दृष्टि-सुखप्रदं सुविशदं कांत्यास्पदं संपदा–
पात्रं जीवमनप्रसाद-जनकं भाति त्वदीयं मुखम ।।

३. श्री चक्रेश्वरि ! युष्मदाननरविं पश्यन्ति नैवोदितं ।
ध्वस्त-ध्वान्ततर्ति प्रदत्तसुगतिं संप्राप्त-मार्ग-स्थितिं ।।
ते ज्ञेया इह कौशिका इव जना हेयाः सतां सर्वथा ।
नादेयाः कुदृशो भवंति भगवत्युच्चैः शिवं वांछताम् ।।

४. श्री चक्रेश्वरि ! युष्मदंघ्रि चरितं सर्वत्र तद्विश्रुतं ।
कस्याज्ञस्य मनोमुदे भवति नो निष्पुण्यचूड़ामणेः ।।
कारुण्यान्वित-भंगि-संमत–मति भ्रान्ति-प्रशान्त-प्रियं ।
श्री संकेतगृहं सदास्तविरहं पुण्यानुवंधि स्फुटम् ।।

५. श्री चक्रेश्वरि ! ये स्तुवंति भवतीं भव्याभवद्भक्तयः ।
श्री सर्वज्ञ-पदारविंद-युगले विश्राममातन्वतीम् ।।
भृंगीवत् सुदृशां सुखं त्वसदृशं संप्रार्थयन्तो जना–
स्ते स्युर्ध्वस्तविपत्तयः सुमतयः स्पष्टं जितारातयः ।।

६. श्री चक्रेश्वरि ! नित्यमेव भवती नामापि ये सादरं।
संतः सत्यशमाश्रिताः प्रतिपदं सम्यक् स्मरंति स्फुरत् ॥
तेषां किं दुरितानि यांति निकटे, नायाति किं श्री गृहे ?
नोपैति द्विषतां गणोऽपि विलयं नाभीष्ट सिद्धिर्भवेत् ?

७. श्री चक्रेश्वरि ! ये भवंति भवती पादारविंदाश्रिता–
स्ते भृंगा इव कामितार्थः मधुनः पात्रं सदैवांगिनः ॥
जायंते जगति प्रतीति-भवनं भव्याः स्फुरत्कीर्तयः।
तेषां क्वापि कदापि सा भवति नो, दारिद्रयमुद्रा गृहे ॥

८. श्री चक्रेश्वरि ! यः स्तवं तव करोत्युच्चैः स किं मानवः।
कस्मादंत्यजनाच्च याचत इह क्लेशैर्विमुक्ताशयः ?
कास-श्वास-शिरोगल-ग्रहकटी-वातातिसार-ज्वर–
श्रोतो नेत्रगतामयैरपि न स श्रेयानिह प्रार्थ्यते ॥

९. श्री चक्रेश्वरि ! शासनं जिनपतेस्तद्रक्षसि त्वं मुदा।
ये केचिज्जिनभावितान्यवितथान्युच्चैः प्रजल्पंति च ॥
भव्यानां पुरतो हितानि कुरुषे तेषां तु तुष्टिं सदा।
क्षुद्रोपद्रवविद्रवं प्रतिपदे कृत्वा कृतान्तादपि ॥

१०. श्री चक्रेश्वरि ! विश्व-विस्मयकरी त्वं कल्पवृक्षोपमा।
धत्सेऽभीष्ट-फलानि-वस्तु-निकृतिं दत्से विना संशयं ॥
तेन त्वं विनुता मयाऽपि भवती मत्वेति मन्निश्चयं।
कुर्याः श्री जिनदत्त-भक्तिषु मनो मे सर्वदा सर्वथा ॥

( २३ )

## श्री जिनेन्द्र स्तवन

१. नम्राखिलाऽखण्डल-मौलिरत्न-रश्मिच्छटापल्लवितांघ्रिपीठः ।
विध्वस्त-विश्व-व्यसन-प्रवन्धः त्रिलोकवंधुः जयताज्जिनेन्द्रः ॥

२. मूढ़ोस्म्यहं विज्ञपयामि यत्वा-मपेतरागं भगवन् ! कृतार्थम् ।
नहि प्रभूणामुचित-स्वरूप-निरूपणाय क्षमतेऽर्थिवर्गः ॥

३. मुक्तिं गतेऽपीश विशुद्धचित्ते गुणाधिरोपेण ममासि साक्षात् ।
भानुर्दवीयानपि दर्पणांशु-सङ्गान्न किं द्योतयते गृहान्तः ॥

४. तव स्तवेन क्षयमङ्गभाजां, भजन्ति जन्मार्जित-पातकानि ।
कियच्चिरं चण्डरुचेर्मरीचेः स्तोमे तमांसि स्थितिमुद्वहन्ति ॥

५. शरण्य ! कारुण्यपरः परेषां, निहंसि मोहज्वरमाश्रितानाम् ।
मम त्वदाज्ञां वहतोऽपि मूर्ध्ना, शान्ति न यात्येष कुतोऽपि हेतोः ॥

६. भवाटवी-लङ्घन-सार्थवाहं, त्वामाश्रितो मुक्तिमहं यियासुः ।
कषाय-चौरैर्जिन ! लुंप्यमानं रत्नत्रयं मे तदुपेक्षसे किम् ?

७. लब्धोसि स त्वं हि मया महात्मा, भवाम्बुधौ वंभ्रमता कथंचित् ।
आ पापपिण्डेन नतो न भक्त्या, न पूजितो नाथ न तु स्तुतोऽसि ॥

८. संसार-चक्रे भ्रमयन् कुवोध-दण्डेन मां कर्ममहाकुलालः ।
करोति दुःख-प्रचयस्य भाण्डं, ततः प्रभो ! रक्ष जगच्छरण्य ! ॥

९. कदा त्वदाज्ञा-करणाप्ततत्वस्त्यक्त्वा ममत्वादि भवैककन्दम् ।
आत्मैकसारो निरपेक्षवृत्तिर्मोक्षेऽप्यनिच्छो भवितास्मि नाथ !

१०. तवत्रियामापतिकान्तिकान्तै-र्गुणैर्नियम्यात्ममन-प्लवङ्गम् ।
कदा त्वदाज्ञाऽमृतपानलोलः, स्वामिन् ! परब्रह्मरतिं करिष्ये ॥

११. एतावतीं भूमिमहं त्वदंघ्रि-पद्म-प्रसादात्-गतवानधीश !
हठेन पापास्तदपि स्मराद्याः, हा मामकार्येषु नियोजयन्ति ।।

१२. भद्रं न किं त्वय्यपि नाथ ! नाथे, सम्भाव्यते मे यदपि स्मराद्याः ।
अपाक्रियन्ते शुभभावनाभिः, पृष्ठं न मुंचन्ति तथापि पापाः ।।

१३. भवाम्बुराशौ भ्रमतः कदापि मन्ये न मे लोचनगोचरोऽभूः ।
निस्सीम-सीमन्तक-नारकादि-दुःखातिथित्वं कथमन्यथेश !

१४. चक्रासिचापाङ्कुशवज्रमुख्यैः, सल्लक्षणैर्लक्षितमंघ्रियुग्मम् ।
नाथ ! त्वदीयं शरणं गतोऽस्मि, दुर्वार-मोहादि विपक्ष-भीतः ।।

१५. अगम्य-कारुण्य-शरण्यपुण्यः ! सर्वज्ञ ! निष्कण्टक ! विश्वनाथ !
दीनं हताशं शरणागतञ्च, मां रक्ष-रक्ष, स्मरभिल्ल-भल्लात् ।।

१६. त्वया विना दुष्कृतचक्रवालं, नान्यः क्षयं नेतुमलं ममेश ।
किं वा विपक्षप्रतिचक्रमूलं, चक्रं विना च्छेत्तुमलं भविष्णु ।।

१७. यद्देवदेवोऽसि महेश्वरोसि, बुद्धोसि, विश्वत्रय-नायकोऽसि ।
तेनान्तरङ्गारिगणाभिभूतस्तवाग्रतो रोदिमि हा सखेदम् ।।

१८. स्वामिन्नधर्मव्यसनानि हित्त्वा, मनः समाधौ निदधामि यावत् ।
तावत् क्रुधेवान्तरवैरिणो मामनल्प मोहान्ध्यवशं नयन्ति ।।

१९. त्वदागमाद्देव ! सदैव भीताः मोहादयो यन्मम वैरिणोऽमी ।
तथापि मूढ़स्य पराप्तवुद्ध्या तत्सन्निधौ हा न किमप्यकृत्यम् ।।

२०. म्लेच्छैर्नृशंसैरतिराक्षसैश्च, विडम्बितोऽमीभिरनेकशोऽहम् ।
प्राप्तस्त्विदानीं भुवनैकवीर ! त्रायस्व मां यत्तव पादलीनम् ।।

२१. हित्त्वा स्वदेहेऽपि ममत्वबुद्धिं, श्रद्धापवित्रीकृतसद्विवेकः ।
मुक्तान्यसंगः समशत्रुमित्रः स्वामिन् ! कदा संयममातनिष्ये ।।

२२. त्वमेव देवो मम वीतराग-धर्मो भवद्दर्शितधर्म एव ।
इति स्वरूपं परिभाव्य तस्मान्-नोपेक्षणीयो भवति स्व भृत्यः ।।

२३. जिताजिताशेप सुराऽसुराद्याः कामादयः काममभी त्वयेश !
त्वां प्रत्यसक्तास्तव सेवकं तु, विघ्नन्ति हा ते पुरुषं रूषेव ।।

२४. सामर्थ्यमेतद्भवतोऽस्ति सिद्धं, सत्वानशेषानपि नेतुमीशः ।
क्रिया-विहीनं भवदङ्घ्रि-लीनं, दीनं न किं रक्षसि मां शरण्यम् ।।

२५. त्वत्पादपद्मद्वितयं जिनेन्द्र ! स्फुरत्यजस्रं हृदि यस्य पुंसः ।
विश्वत्रयीश्रीरपि नूनमेति, तत्राश्रमार्थं सहचारिणीव ।।

२६. अहं प्रभो ! निर्गुणचक्रवर्ती, क्रूरो दुरात्मा हतकः स पाप्मा ।
हा दुःखराशौ भव-वारिराशौ, यस्मान्निमग्नोस्मि भवद्विमुक्तः ।।

२७. स्वामिन्निमग्नोस्मि सुधासमुद्रे, यन्नेत्रपात्रातिथिरद्य मेऽभूः ।
चिन्तामणौ स्फूर्जति पाणि-पद्मे, पुंसामसाध्यो नहि कश्चिदस्ति ।।

२८. त्वमेव संसारमहाम्बुराशौ, निमज्जतो मे जिन ! यानपात्रम् ।
त्वमेव मे श्रेष्ठसुखैकधाम, विमुक्तिरामा-घटनाऽभिरामः ।।

२९. चिन्तामणिस्तस्य जिनेश ! पाणौ, कल्पद्रुमस्तस्य गृहांगणस्थः ।
नमस्कृतो येन सदातिभक्त्या, स्तोत्रैः स्तुतो भाववलार्चितोऽसि ।।

३०. निमील्य नेत्रे मनसः स्थिरत्वं, विधाय यावज्जिन ! चिन्तयामि ।
त्वमेव तावन्न परोऽस्ति देव ! निःशेष-कर्मक्षय-हेतुरत्र ।।

( २४ )

## श्री वर्द्धमान भक्तामर स्तोत्र

(श्री घासीलालजी महाराज)

१. भक्तामरप्रवरमौलिमणिव्रजेषु,
ज्योतिः प्रभूतसलिलेषु सरोवरेषु ।
चेतोऽलिमंजु-विकसत्कमलायमानं,
श्री वर्द्धमानचरणं शरणं व्रजामि ।।

२. आनन्दनन्दनवनं सवनं सुखानां,
सद्भावनं शिवपदस्य परं निदानम् ।
संसारपारकरणं करणं गुणानां,
नाथ ! त्वदीयचरणं शरणं प्रपद्ये ।

३. सिद्धौषधं सकलसिद्धिपदं समृद्धं,
शुद्धं विशुद्धसुखदं च गुणैः समिद्धम् ।
ज्ञानप्रदं शरणदं विगताघवृन्दं,
ध्यानास्पदं शिवपदं शिवदं प्रणौमि ।।

४. बालो विवेकविकलो निजबालभावा–
दाकाशमानमपि कर्त्तुमिव प्रवृत्तः ।
ज्ञानाद्यनन्तगुणवर्णनकर्त्तुकामः,
कामं भवामि करुणाकर ! ते पुरस्तात् ।।

५. स्पर्शो मणिर्नयति चेन्निजसन्निधानात्,
लोहं हिरण्यपदवीमिति नात्र चित्रम् ।
किन्तु त्वदीयमनुचिन्तनमेव दूरात्,
साम्यं तनोति तव सिद्धिपदे स्थितस्य ।।

६. कुन्देन्दुहाररमणीयगुणान् जिनेन्द्र !
वक्तुं न पारयति कोऽपि कदापि लोके ।
कः स्यात् समस्तभुवनस्थितजीवराशे-
रेकैकजीवगणनाकरणे समर्थः ?

७. शक्त्या विनाऽपि मुनिनाथ ! भवद्गुणानां,
गाने समुद्यतमतिर्नहि लज्जितोऽस्मि ।
मार्गेण येन गरुडस्य गतिः प्रसिद्धा,
तेनैव किं न विहगस्य शिशुः प्रयाति ?

८. त्वद्वाक् सुधासुरुचिरेव विभो ! बलान्मां,
वक्तुं प्रवर्तयति नाथ ! भवद्गुणानाम् ।
यद् वर्द्धते जलनिधिस्तरलैस्तरंगैस्-
तत्रास्ति चन्द्रकिरणोदय एव हेतुः ॥

९. अज्ञानमोहनिकरं भगवन् ! हृदि स्थं,
हर्त्तुं प्रभुः प्रवचनं भवदीयमेव ।
गाढ-स्थिरं चिरतरं तिमिरं दरीस्थं,
हर्त्तुं प्रभुः सुरुचिरा रुचिरेव नान्यत् ॥

१०. वाक्य-प्रमाणनयरीतिगुणैर्विहीनं,
निर्भूषणं यदपि बोधिद ! मामकीनम् ।
स्यादेव देवनरलोकहिताय युष्मत्,
संगाद् यथा भवति शुक्तिगतोदविन्दुः ॥

११. आस्तां तव स्तुतिकथा मनसोऽप्यगम्या,
नामापि ते त्वयि परं कुरुतेऽनुरागम् ।
जम्बीरमस्तु खलु दूरतरेऽपि देव !
नामापि तस्य कुरुते रसनां रसालाम् ॥

१२. नानामणिप्रचुरकांचनरत्नरम्यम्,
स्वीयं प्रयच्छति पदं जनकः सुताय ।
त्वद्ध्यानमेव जिनदेव ! पदं त्वदीयं,
भव्याय नित्यसुखदं प्रकटीकरोति ॥

१३. ज्ञानाद्यनन्तगुणगौरवपूर्ण – सिन्धुं,
वन्धुं भवन्तमपहाय परं क इच्छेत् ?
प्राज्यं प्रलभ्य भुवनत्रितयस्य राज्यं,
कः कामयेत किल किंकरतामवुद्धिः ॥

१४. त्वद्गात्रतो परिणताः परमाणवोऽपि,
सर्वोत्तमा निरुपमाः सुषमा भवन्ति ।
लब्ध्वा शरण्य ! शरणं चरणं जनास्ते,
सिद्धाः भवेयुरिति नाथ ! किमत्र चित्रम् ॥

१५. कश्चण्डकौशिकसमं भवसिन्धुपार–
नेता सुदर्शनसमं च जगत्त्रयेऽपि ।
हे नाथ ! तत् कथय ते चरणाम्वुजस्य,
येनोपमा गुणलवेन घटेत लोके ॥

१६. लोकोत्तरं सकलमंगलमोदकन्दं,
स्यन्दं वचोऽमृतरसस्य जगत्यमन्दम् ।
स्वर्गापवर्गसुखदं भवदास्यचन्द्रं,
दृष्ट्वा मुदं भजति भव्यचकोरवृन्दम् ॥

१७. भ्रान्त्याऽपि भद्रमुदितं भवदीयनाम,
सिद्धेर्विवाग्नि भगवन् ! सुकृतानि सूते ।
अज्ञानतोयि पतितं सितखण्डखण्डं,
धत्ते मुखे मधुरिमाणमखण्डमेव ॥

१८. यो मस्तकं नमयते जिन ! तेंऽघ्रिपद्मे,
सर्वर्द्धिसिद्धिनिचयः श्रयते तमेव ।
तीर्थंकरः शुभकरः प्रविभूय सोऽयं,
स्थानं प्रयाति परमं ध्रु वनित्यशुद्धम् ॥

१९. पृच्छामि नावमधुना मुनिनाथ ! नित्यं,
प्राप्ता त्वया तरणतारणता हि कस्मात् ।
सा नोत्तरं वितनुते त्वमपि प्रयातस्-
तद् ब्रू हि कोऽस्ति परितोषकरस्तृतीयः ॥

२०. पीयूषमत्र निजजीवनसारहेतुं,
पीत्वाऽऽप्नुवन्ति मनुजास्तनुमात्ररक्षाम् ।
स्याद्वादसुन्दररुचं भवतस्तु वाच,
पीत्वा प्रयान्ति सुतरामजरामरत्वम् ॥

२१. चक्री यथा विपुलचक्रबलादखण्डं,
भूमण्डलं प्रभुतया समलंकरोति ।
रत्नत्रयेण मुनिनाथ ! तथा पृथिव्यां,
जैनेन्द्रशासनपरान् भविनो विधत्से ॥

२२. कालस्य मानमखिलं शशिभास्कराभ्यां,
पक्षद्वयेन गगने गमनं खगानाम् ।
तद्वद् भवानपि भवाद् भगवन् ! जनानां,
ज्ञानक्रियोभयवशादिह मुक्तिमाह ॥

२३. आनादिकं हृदिगतं विषमं विषात्कम्,
संसारकाननपरिभ्रमणैकहेतुम् ।
मिथ्यात्वदोषमखिलं मलिनस्वरूपम्,
क्षिप्रं प्रणाशयति ते विमलः प्रभावः ॥

२४. प्रामादिका विषयमोहवशं गता ये,
कर्त्तव्यमार्गविमुखाः कुमतिप्रसक्ताः ।
अज्ञानिनो विषयघूर्णितमानसाश्च,
सन्मार्गमानयति तान् भवतः प्रभावः ॥

२५. कल्पद्रुमानिव गुणांस्तव चन्द्रशुभ्रान्,
चिन्तामणीनिव समीहितकामपूर्णान् ।
ज्ञानादिकान् जनमन-परितोषहेतून्,
संस्मृत्य को न परितोषमुपैति भव्यः ॥

२६. चिन्तामणिः सुरतरुर्निधयस्तथैव,
तेभ्यः सुखं क्षणिकनश्वरमाप्नुवन्ति ।
त्वत्सेविनो भविजना ध्रुवनित्यसौख्यं,
तस्मादितोऽप्यधिकतां समुपैसि नाथ !

२७. ध्वान्तं न याति निकटे रविमण्डलस्य,
चिन्तामणेश्च सविधे खलु दुःखलेशः ।
रागादिदोषनिचया भगवंस्तथैव,
नो यान्ति किंचिदपि देव ! भवत्समीपे ॥

२८. शीतांशुमण्डल-जलामृतफेनपुंजं,
प्रोत्फुल्लितेप्सितसुपुष्पविशालकुंजम् ।
धर्मं निरूप्य परमं खलु दुखभंजं,
नित्यं विकासयसि भव्यद ! भव्यकंजम् ॥

२९. दूरस्थितोऽपि सितरश्मिरलं स्वकीयैः,
शुभ्रैर्विकासिकिरणैः सुविकासभावम् ।
अन्तर्गतं वितनुते किल कैरवाणां,
तद्वज्जिनेन्द्र ! गुणराशिरयं जनानाम् ॥

३०. शीतांशुरश्मिनिकरप्रसरानुषंगाद्,
यच्चन्द्रकान्तमणयः परितो द्रवन्ति ।
तद्वत्त्वदीयमहिमश्रवणेन भव्याः,
शान्ताः प्रवृद्धकरुणा-द्रविता भवन्ति ।।

३१. दुःखप्रधानशिववर्जितहीयमाने,
काले सदा विषयजालमहाकराले ।
भव्या भवत्प्रवचनं शिवदं जिनेन्द्र !
पीत्वाऽऽत्मशान्तिमुपयान्ति नितान्त शुद्धाम् ।।

३२. षट्कायनाथ ! मुनिनाथ ! गुणाधिनाथ !,
देवाधिनाथ ! भविनाथ ! शुभैकनाथ !
अस्मान् प्रबोधय जिनाधिप ! दूरतोऽपि,
किं नो स्मितानि कुरुते कुमुदानि चन्द्रः ।।

३३. वृक्षोऽपि शोकरहितो भवदाश्रयेण,
जातस्ततः स यदशोक इति प्रसिद्धः ।
भव्याः पुनर्जिन ! भवच्चरणाश्रयेण,
किं नाम कर्मरहिता न भवन्त्यशोकाः ।।

३४. सिंहासने मणिमये परिभासमानं,
नाथं निरीक्ष्य किल सन्दिहते विधिज्ञाः ।
इन्दुः किमेष ? नहि यत् स कलंकरंकुः,
किं वा रविर्न स तु चण्डतरप्रकाशः ?

३५. पुंजस्त्विषामिति पुरा निरणायि पश्चाद्,
व्यक्ताकृतिस्तनुधरोऽयमिति प्रबुद्धैः ।
भव्यैः पुमानिति पुनः प्रशमस्वभावः,
कारुण्यराशिरिति वीरजिनः क्रमेण ।।

३६. देवैरचित्तकुसुमप्रकरस्य वृष्टया,
दिङ्मण्डलं सुरभितं भवतोऽतिशेपात् ।
स्याद्वादचारुरचनावचनावलीनां,
वृष्टया भवन्ति भविनः प्रशमे निमग्नाः ॥

३७. लोकोत्तरा सकलजीववचोविलास-
पीयूषवत्परिणता भवदीय भाषा ।
सर्वर्द्धिसिद्धिगुणवृद्धिविधानदक्षा,
साक्षात्तनोति कुशलं सकलं सुलक्षा ॥

३८. गोक्षीर-नीर-शशि-कुन्द-तुषार-हार-
शुक्लैर्वियद्विलसितैः शुभचामरौघैः ।
ध्यानं सितं तव विभो ! विनिवेद्यते यत्,
सर्वज्ञता तदनु कर्मसमूलनाशः ॥

३९. आखण्डलैरवनिमण्डलमागतैस्तैर्-
भामण्डलं तव नुतं मुनिमण्डलैश्च ।
मोहान्धकारपरिहारकरं जिनेन्द्र !
तुल्यं कथं भवति तद् रविमण्डलेन ॥

४०. यत्कर्मवृन्दसुभटं विकटं विजेता,
लोकत्रयप्रभुरसावति-शेषधारी ॥
तस्माज्जिनेन्द्रसरणिं शरणीकुरुध्वं,
भव्या ! इति ध्वनति खे किल दुन्दुभिस्ते ॥

४१. अत्युज्ज्वलं विजितशारदचन्द्रविम्वं,
सम्मोदकं सकलमंगलमंजुकन्दम् ।
छत्रत्रयं तव निवेदयते जिनेन्द्र !
रत्नत्रयं प्रभुपदं शिवदं ददाति ॥

४२. यत्र त्वदीयपदपंकजसन्निधानं,
सन्धानभूमिरसमाऽपि समा समन्तात् ।
सर्वर्त्तवश्च सुखदा विलसन्ति लोका,
मन्ये नु कल्पतरुरेव भवत्पदाब्जम् ।।

४३. दिव्यो ध्वनिर्गुणगणश्च यशोऽपि दिव्यं,
दिव्याऽपि भावसमता प्रभुताऽपि दिव्या ।
तस्माद् विभो ! क्व तुलना भुवनत्रयेऽपि,
ज्योतिर्गणाः किमिह भानुसमा विभान्ति ।।

४४. दिव्यं प्रभावमवलोक्य सुरादयस्ते,
पीयूषसारवचनानि निशम्य सम्यक् ।
आनन्दवारिधितरंगनिमग्नचित्तास्–
त्वद्वर्णनाक्षमतया प्रणमन्ति भावात् ।।

४५. तुभ्यं नमः सकलमंगलकारकाय,
तुभ्यं नमः सकलनिर्वृतिदायकाय ।
तुभ्यं नमः सकलकर्मविनाशकाय,
तुभ्यं नमः सकलतत्त्वनिरूपकाय ।।

४६. तुभ्यं नमः सकलजीवदयापराय,
तुभ्यं नमः शिवदशासनभास्कराय ।
तुभ्यं नमः सकललोकशुभंकराय,
तुभ्यं नमः सततमस्तु जिनेश्वराय ।।

४७. रक्षःपिशाचनिकरैरदयोपसृष्टं,
दुर्वृत्त-दुष्ट-खलसृष्टविसृष्टमुष्टम् ।
दारिद्रयदुखगदजालविशालकष्टं,
नष्टं भवत्यखिलमाशु भवत्प्रभावात् ।।

४८. चौरारि-सिंह-गजपन्नग-दुष्ट-दाव–
हिंस्रप्रचार–खलवन्धनदुर्ग–भूमौ ।
सर्वं भयं भयकरं प्रणिहन्ति नाथ !
त्वद्ध्यानमात्रमखिलं भुवनत्रयेऽस्मिन् ॥

४९. सिंहोरग–प्रखरसूकर–हिंस्रजालैर्–
व्याप्ताऽटवी विकटलुण्ठक-कण्टनालैः ।
सर्वर्त्तु-पुष्प-फल-पल्लवशोभमाना,
सा नन्दनं भवति ते स्मरणाज्जिनेन्द्र !

५०. घोरातिघोरविकटे सुभटेऽतिकष्टे,
भ्रष्टे वले विविधदुःखशतैर्विशिष्टे ।
शस्त्राहतिप्रविचलद्रुधिरप्रवृद्धे,
युद्धे तनोति तव नाम विशुद्धशान्तिम् ॥

५१. सर्वर्द्धि-सिद्धिदमिदं परमं पवित्रं,
स्तोत्रं च यः पठति वीरजिनेश्वरस्य ।
चिन्तामणिः सुरतरुः सकलार्थसिद्धिः,
संसेवितुं तमनुकूलयितुं समेति ॥

५२. श्री वर्द्धमान–शुभनामगुणानुवद्धां,
शुद्धां विशुद्धगुणपुष्पसुकीर्तिगन्धाम् ।
यो घासिलालरचितां स्तुतिमंजुमालां,
कण्ठे विभर्त्ति खलु तं समुपैति लक्ष्मीः ॥

( २५ )

## श्री परमानन्द-पंचविंशतिका

१. परमानन्द-संयुक्तं, निर्विकारं निरामयम् ।
ध्यानहीना न पश्यन्ति, निज-देहे व्यवस्थितम् ।।

२. अनन्तसुख-सम्पन्नं, ज्ञानामृत-पयोधरम् ।
अनन्तवीर्य-सम्पन्नं, दर्शनं परमात्मनः ।।

३. निर्विकारं निराधारं, सर्वसंगविवर्जितम् ।
परमानन्द-संपन्नं, शुद्धचैतन्य-लक्षणम् ।।

४. उत्तमाऽध्यात्मचिन्ता च, मोह-चिन्ता च मध्यमा ।
अधमा कामचिन्ता च, परचिन्ताऽधमाधमा ।।

५. निर्विकल्पं समुत्पन्नं, ज्ञानमेव सुधारसम् ।
विवेकमंजलिं कृत्वा, तं पिबन्ति तपस्विनः ।।

६. सदानंदमयं जीवं, यो जानाति स पण्डितः ।
स सेवते निजात्मानं, परमानन्द-कारणम् ।।

७. नलिन्यां च यथा नीरं, भिन्नं तिष्ठति सर्वदा ।
तथैवात्मा स्वभावेन, देहे तिष्ठति सर्वदा ।।

८. द्रव्यकर्म-विनिर्मुक्तं, भावकर्म-विवर्जितम् ।
नोकर्म-रहितं विद्धि, निश्चयेन चिदात्मनम् ।।

९. अनंतब्रह्मणो रूपं, निजदेहे व्यवस्थितम् ।
ध्यानहीना न पश्यन्ति, जात्यन्धा इव भास्करम् ।।

१०. तद् ध्यानं क्रियते भव्यैर्, येन कर्म विलीयते ।
तत् क्षणं दृश्यते शुद्धं, चिच्-चमत्कारलक्षणम् ।।

११. चिदानंदमयं शुद्धं, निराकारं निरामयम् ।
अनंत - सुखसम्पन्नं, सर्वसंगविवर्जितम् ॥

१२. लोकमात्रप्रमाणो हि, निश्चये न हि संशयः ।
व्यवहारे देहमात्रो, कथयन्ति मुनीश्वराः ॥

१३. यत्क्षणं दृश्यते शुद्धं, तत्क्षणं गतविभ्रमः ।
स्वस्थचित्तं स्थिरीभूतं, निर्विकल्पं समाधिना ॥

१४. स एव परमं ब्रह्म, स एव जिनपुंगवः ।
स एव परमं तत्त्वं, स एव परमो गुरुः ॥

१५. स एव परमं ज्योतिः, स एव परमं तपः ।
स एव परमं ध्यानं, स एव परमात्मकम् ॥

१६. स एव सर्वकल्याणं, स एव सुखभाजनम् ।
स एव शुद्धचिद्रूपं, स एव परमं शिवम् ॥

१७. स एव ज्ञानरूपो हि, स एवात्मा न चाऽपरः ।
स एव परमा शान्तिः, स एव भवतारकः ॥

१८. स एव परमानंदः, स एव सुखदायकः ।
स एव घन-चैतन्यं, स एव गुण-सागरः ॥

१९. परमाह्लाद - संपन्नं, राग - द्वेषविवर्जितम् ।
सोऽहं तु देहमध्यस्थं, यो जानाति स पण्डितः ॥

२०. आकार-रहितं शुद्धं, स्वस्वरूपे व्यवस्थितम् ।
सिद्धमष्टगुणोपेतं, निर्विकारं निरंजनम् ॥

२१. तत्समं तु निजात्मानं, यो जानाति स पण्डितः ।
सहजानंद-चैतन्यं, प्रकाशयति महीयसे ॥

२२. पाषाणेषु यथा हेमं, दुग्ध-मध्ये यथा घृतम् ।
तिल-मध्ये यथा तैलं, देह-मध्ये तथा शिवः ।।

२३. काष्ठमध्ये यथा वह्निः, शक्तिरूपेण तिष्ठति ।
अयमात्मा शरीरेषु, यो जानाति स पण्डितः ।।

२४. आनन्द-रूपं परमात्मतत्त्वं,
समस्त - संकल्पविकल्प- मुक्तम् ।
स्वभावलीना निवसन्ति नित्यं,
जानाति योगी स्वयमेव तत्त्वम् ।।

२५. ये धर्मशीला मुनयः प्रधानास्,
ते दुःखहीना नियतं भवन्ति ।
संप्राप्य शीघ्रं परमात्मतत्त्वं,
व्रजन्ति मोक्षं क्षणमेकमध्ये ।।

( २६ )

## त्रिकाल-चतुर्विंशति-जिनस्तवः

(आचार्य देवेन्द्र)

### अतीतजिनाः

१. केवलज्ञानिनं निर्वाणिनं सागरमेव च ।
महायशोऽभिधं वन्दे भक्त्या विमलनामकम् ।।

२. सर्वानुभूतिं प्रणुमः श्रीधरं दत्तसंज्ञकम् ।
दामोदरं सुतेजस्कं स्वामिनं मुनिसुव्रतम् ।।

३. सुमतिं शिवगत्याख्यमस्ताघं च नमीश्वरम् ।
अनिलं यशोधराह्वं कृतार्घं च नमाम्यहम् ।।

४. जिनेश्वरं शुद्धमतिं सेवे शिवकरं तथा ।
स्यन्दभं सम्प्रतिं चेत्यतीताः सन्तु श्रिये जिनाः ।।

### वर्तमानजिनाः

५. ऋषभं चाजितं चैव सम्भवं चाभिनन्दनम् ।
सुमतिं पद्मप्रभाख्यं सुपार्श्वं नौम्यहं जिनम् ।।

६. चन्द्रप्रभं च सुविधिं कलये हृदि शीतलम् ।
श्रेयांसं वासुपूज्यं च विमलानन्तजिज्जिनौ ।।

७. धर्मनाथं तथा शांतिनाथ कुन्थुं तथाह्यरम् ।
मल्लिं मुनिसुव्रताह्वं पूजयामितमां नमिम् ।।

८. नेमिनं पार्श्वनाथं च वर्द्धमानमभिष्टुमः ।
इत्यमी वर्तमानास्ते भूयासुर्भूतये जिनाः ।।

